# श्रीहरिहरात्मजाष्टकम्

{॥ श्रीहरिहरात्मजाष्टकम् ॥}

हरिवरासनं विश्वमोहनम्

हरिदटीश्वरम् आराध्यपादुकम् ।

अरिविमर्दनं नित्यनर्तनम्

हरिहरात्मजं देवमाश्रये ॥ १॥

चरणकीर्तनं भक्तमानसम्

भरणलोलुपं नर्तनालसम् ।

अरुणभासुरं भूतनायकम्

हरिहरात्मजं देवमाश्रये ॥ २॥

प्रणयसत्यकं प्राणनयकम्

प्रणतकल्पकं सुप्रभञ्चितम् ।

प्रणवमन्दिरं कीर्तनप्रियम्

हरिहरात्मजं देवमाश्रये ॥ ३॥

तुरगवहनं सुन्दराननम्

वरगदायुधं वेदवर्णितम् ।

गुरुकृपाकरं कीर्तनप्रियम्

हरिहरात्मजं देवमाश्रये ॥ ४॥

त्रिभुवनार्चितं देवतात्मकम्
त्रिनयनप्रभुं दिव्यदेशिकम् ।
त्रिदशपूजितं चिन्तितप्रदम्
हरिहरात्मजं देवमाश्रये ॥ ५॥

भवभयापहं भावुकावकम्
भुवनमोहनं भूतिभूषणम् ।
धवलवाहनं दिव्यवारणम्
हरिहरात्मजं देवमाश्रये ॥ ६॥

कलमृदुस्मितं सुन्दराननम्
कलभकोमलं गात्रमोहनम् ।
कलभकेसरीमाजिवाहनम्
हरिहरात्मजं देवमाश्रये ॥ ७॥

श्रितजनप्रियं चिन्तितप्रदम्
श्रुतिविभूषणं साधुजीवनम् ।
श्रुतिमनोहरं गीतलालसम्
हरिहरात्मजं देवमाश्रये ॥ ८॥

॥ इति श्री हरिहरात्मजाष्टकम् सम्पूर्णम् ॥

